अथोक्तिभेदव्यक्तिर्विधीयते । तत्रादावुक्तिभेदबीजमार्ययाऽऽह—

**उक्तेश्च दश पदार्था उत्पत्तौ मूलमत्र शेषास्तु ।**
**तत्पल्लवास्तदाश्रयकृतभेदास्ते च कालाद्याः ॥ २५ ॥** [प० २२-१]

उक्तेश्चोत्पत्तौ—जन्मनि मूलं प्रधानं कारणं दशैव पदार्थाः । अत्र=लोकानां वाग्व्यवहारे । शब्दार्थो हि शब्देन प्रयुक्तेन प्रतिपाद्यते । स च दशप्रकार एव । लिङ्गार्थादिर्वक्ष्यमाणः । ये तु तदितरे, तेषामेव मूलभूतानां पदार्थानां पल्लवाः । तदाश्रयकृतभेदाः—ते च ते आश्रयाश्च । आश्रयो विषय उच्यते । कृतो[1] भेदो यैस्ते तथा । तदाश्रयेषु कृतभेदास्तदाश्रयकृतभेदाः । अथवा, त एव दश पदार्था आश्रयो विषयो येषाम्, तथा कृतो भेदो यैः । ततस्तदाश्रयाश्च ते कृतभेदाश्च तदाश्रयकृतभेदाः । तेषु दशसु पदार्थेषु ते आश्रिताः, तेषामेव पदार्थानामुत्पादितोक्तिभेदाः । उक्तिभेदहेतवस्ते धर्माः । न पुनः पृथक् प्रयोज्यमर्थान्तरमेकादशं किञ्चिदित्यर्थः । अतो दशैव पदार्था इति, नतु तदितरे । तर्हि के ते इत्याह—ते च कालाद्याः—इति । कालो लिङ्गं संख्या पुरुषा इत्यादयः ॥ छ ॥

अथ तानेव पदार्थानाह—[प० २२-२]

**लिङ्गं क्रिया ततोऽपि च कारकषट्कं ततश्च संबन्धः ।**
**आमन्त्रणं च दशमं किन्त्वेतत् केवलं नोक्तौ ॥ २६ ॥**

प्रथमं तावल्लिङ्गम्—अव्यतिरिक्तो लिङ्गार्थः । द्वितीया क्रिया—धात्वर्थः । ततः कर्तृ-कर्म-करण-संप्रदान-अपादान-अधिकरणानि षट् । ततश्च संबन्धः । एवं नव । दशमं च आमन्त्रणम् । एते च लिङ्गार्थादयो नव पदार्थाः, केवला अपि विवक्षाविषया भवन्ति, प्रयुज्यन्ते च । आमन्त्रणं तु लिङ्गार्थसंबद्धमेव परं प्रयोगं याति, न केवलम्; तस्य तदेकविषयत्वात् । आमन्त्रितो हि 'किं भणसि?' इत्यपेक्षते । तदुत्तरेण च वाक्यं समाप्यते, अतो नास्य केवलस्योक्तिः । अत उक्तम्—किन्त्वेतत् केवलं नोक्तौ—इति । अतो नवानामेव भेदा दर्शनीया इति भावः ॥ छ ॥

अथोक्तिभेदोत्पत्तिक्रमं तत्संख्यां चाह—

**एषां चैकद्व्यादिक्रमेण लोकैर्विवक्षितानां स्युः ।**
**पञ्चशतान्युक्तीनामेकादशसंयुतान्येव ॥ २७ ॥**

एषां च लिङ्गार्थादीनां पदार्थानां नवानां संबन्धपर्यन्तानां पञ्चशतान्युक्तीनां भवन्ति । कीदृशानि?—एकादशसंयुतान्येव—नैकयाप्युक्त्या हीनानि नाप्यधिकानीत्येवार्थः । कथं भूताना[प० २२-३]म्?—एकद्व्यादिक्रमेण लोकैर्विवक्षितानाम् । तद्यथा—एकैकविवक्षायां नवैवोक्तयः, द्वयोर्द्वयोः षट्त्रिंशत्, त्रयाणां त्रयाणां विवक्षायां चतुरशीतिः । चतुर्णां चतुर्णां

षड्विंशत्यधिकं शतम् । एवं पञ्चानां पञ्चानामपि षड्विंशत्यधिकं शतम् । षण्णां षण्णां चतुरशीतिः । सप्तानां सप्तानां षट्त्रिंशत् । अष्टानां अष्टानां नव । नवानामपि विवक्षायामेकम् । एवं पञ्चशतान्येकादशाधिकान्युक्तीनां भवति । कथमियं संख्योत्पद्यत इति चेत्, उच्यते — नवकाद्येकान्तानेकाद्युत्तरच्छेदानङ्कानालिखेत् । ते च यथा —

| ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |

ततः पूर्वेण परं हत्वा स्वच्छेदेन भजेत् । लब्धं छेदे संख्यानां पदार्थानामुक्तिभेदसंख्या भवति । तद्यथा — नवानामध एकच्छेदः । ततश्चैकैकस्य लिङ्गार्थादिपदार्थस्य विवक्षायां नवैवोक्तयः, ९; ततो नवभिरष्टकं हत्वा द्वाभ्यां विभजेल्लब्धं षट्त्रिंशत्, ३६; द्वयोर्द्वयोर्विवक्षायामुक्तिभेदाः । ततो षट्त्रिंशता सप्तकं हत्वा त्रिभिर्विवक्ष्य लब्धं चतुरशीतिः, ८४; त्रयाणां त्रयाणां विवक्षायामुक्तिभेदाः । एवमेव चतुर्णां षाड्विंशं शतं, १२६; [प० २३-२]

पञ्चकादीनामपि विलोमेनैता एव संख्या । यथा पञ्चानां १२६; षण्णां ८४; सप्तानां ३६; अष्टानां ९; नवानामेकं १; सर्वेषां भेदसंख्या ५११ । अत्रार्थे सूत्रम् —

> नवकाद्येकप्रान्तानङ्कानालिख्य ताडयेत् क्रमशः ।
> पूर्वेण परं विभजेदेकाद्येकोत्तरैरङ्कैः ॥
> छेदकसंख्यार्थानामुक्तिभिदस्ता भवन्ति सर्वेषाम् ।
> एकद्व्याद्युक्तीनां भेदमितिः सा भवेदेवम् ॥ इति ।

उदाहरणं वक्ष्यते ॥ छ ॥

अथ 'शेषास्तु तत्पल्लवाः' (का० २५) इत्युक्तमतस्तानाह —

**कालत्रयमथ च क्त्वा-तुम्-शन्तृङभीक्ष्णतादयो लिङ्गम् ।**
**संख्या पुरुषा उक्तानुक्तत्वे भेदहेतवस्तेषाम् ॥ २८ ॥**

पूर्व्वं ये दश पदार्थाः कथितास्तेषु मध्ये क्रियायास्तावद्भेदहे[त]वः के ?, ते कालत्रयं तावत् वर्तमानातीतानागतसंज्ञः( ०ज्ञम् ? ) । एकैव क्रिया स्वपरिच्छिन्नकालत्रयसंबन्धात् त्रिधा भवति । तत्स्वरूपत्वाच्च तस्यास्तद्धर्म्मत्वमुक्तम् । यस्य हि यत्स्वरूपं स तस्य धर्म उच्यते । यथाग्नेरुष्णता । क्त्वा-तुमादयः प्रत्ययार्थाश्च क्रियोक्तिभेदहेतवः । कारकोक्तिभेदहेतवश्च । यथा — लिङ्गं तावत् पुं-स्त्री-नपुंसकाख्यम्, संख्या पुरुषा उक्तानुक्तत्वे [प्र० २४-१] च, एत एव च संबन्धस्यामन्त्रितस्य च । अत एते पल्लवा इव । यथा वृक्षस्य मूलं भवति, तदुद्भूताश्च पल्लवा वृक्षं विस्तारयन्त्येवं धात्वर्थ-लिङ्गार्थादयो मूलभूता दश पदार्थाः, तद्विस्तारकृतश्चैते धर्मा इत्यर्थः ।

नन्वेतैः कालादिभिः पञ्चैर्यावन्तो भेदा भवन्ति तत्संख्याऽपि किमिति न दर्शिता इत्याह—

**एतद्भेदवशात् पुनरुक्तीनां या भिदो न ताः कथिताः।**
**यस्माद्धर्म्मिणि विदिते तद्गतधर्म्माः स्वसंवेद्याः॥ २९॥**

यदा हि पटो जातस्तदा तद्गता ये शुक्लत्वैकत्वसूक्ष्मत्वादयो धर्म्मास्ते तत्संबन्धत्वाद् विदिता एवार्थात्। यतः संकेतादर्थाधिगतिर्धर्मविशिष्टश्च। धर्मी संकेतविषय इति भावः। यस्माद्—इति। धर्मिणि धात्वर्थलिङ्गार्थादिके विदिते सति तद्गता ये धर्म्मा अवयवप्रायास्ते स्वसंवेद्या एव—स्वयमेवात्मानं वेदयन्ति। न हि गवि ज्ञाते खुर-ककुदादयः शाबलेय-धावलेयत्वादयो वा धर्म्मास्तद्गता अविज्ञाता भवन्ति। धर्म्मिणो धर्माश्रयत्वात्। यस्य वस्तुनो यत्स्वरूपं स तस्य धर्म्म उच्यते यतः। तस्मात् धर्म्मनिबन्धना ये धर्म्मिणां भेदास्तेषां विशेषकथनमनुप [प० २४-२] युक्तमेवेति। तस्मान्नवानामेवोक्तिभेदा दर्श्यन्त इति भावः।

अथोदाहरणानि। तत्र च लिङ्गार्थादीनां नवानामप्येकैकस्य, ततो द्वयोर्द्वयोः; इत्यादिक्रमेण ये भेदास्तेऽत्रोक्तिप्रत्युक्तिभ्यां विभक्ता लिखनीयाः। लोकव्यवहारस्य तदात्मकत्वात्। उक्तिर्हि प्रश्न उच्यते तदुत्तरं च प्रत्युक्तिः। प्रश्नोत्तरस्वरूपश्च लोके शब्दव्यवहारः प्रायः। यश्च प्रश्नविषयः स 'किं' शब्देन लोकैः प्रयुज्यते। अतो यत्रोक्तौ लिङ्गार्थादिषु यावन्तः 'किं' शब्दविषयाः, सा तावतामुक्तिरुच्यते। एकस्मिन् पृष्टे सत्येकस्योक्तिः, द्वयोः पृष्टयोर्द्वयोरुक्तिः, त्रिषु त्रयाणामित्यादि यावन्नवसु पृष्टेषु नवानामिति। तत्र लिङ्ग-संख्या-पुरुषैः पञ्चैर्विभक्तस्य केवललिङ्गार्थस्य विवक्षायामुक्ति-प्रत्युक्त्योर्यथा—परिचितेन सहागतमपरिचितं दृष्ट्वा कश्चित् कंचित् पृच्छति—'को ए'—कोऽयम्। परिचितस्योत्तरम् [प० २५-१]—'मोर विसिठु'—मम विशिष्टः। अत्र हि प्रश्नोत्तरयोरव्यतिरिक्तो लिङ्गार्थो विषयः, अत इयं लिङ्गार्थोक्तिरुच्यते। एवं वक्ष्यमाणोदाहरणेष्वपि ज्ञेयम्। 'को ए'—कावेतौ?, राजपुरुषौ। 'को ए'—क एते?, राजद्विजाः। स्त्रीविषये तु प्रश्ने यथा—'को ए'—केयम्?, ब्राह्मणी। 'को ए दू'—के एते द्वे?, मासोपवासिन्यौ। 'को ए जोई'—का एता युवत्यः?, प्रोषितभर्तृकास्त्वत्सेवकसिष्या(शिष्या° ?)नां वध्वः। नपुंसकविषये यथा—'काह ए'—किमिदम्?, द्वीपान्तरफलम्। 'काह ए दुइ वस्तु'—के एते द्वे वस्तुनी?, लवण-हिङ्गुनी। 'काह ए सब'—कान्येतानि सर्वाणि?, त्वद्भार्याभरणानि। सामान्योक्तौ तु प्रश्ने—'काह ए'—किमिदम्?, वृक्षः, कुण्डम्, कुमारीत्याद्युत्तरं भवत्येव।

निर्धारितप्रश्ने तूक्तिर्यथा। 'तेन्ह मांझ कवण ए'—तयोस्तेषां वा मध्ये कतमोऽयम्?, सर्वज्येष्ठः। अथवा कतमावेतौ?, ज्येष्ठ-कनिष्ठौ। [प० २५-२] कतमे एते?, ज्येष्ठभार्यापुत्राः। कतमेयम्?, कनिष्ठा वधूः। कतमे एते?, ज्येष्ठपुत्रवध्वौ। कतमा एताः?, राज्ञो विलासिन्यः। 'अरे जाणसि एन्ह मांझ कवण तोर भाइ'—अहो जानास्येषां मध्ये कस्तव भ्राता?, उत्तरम्—स्वम्। पार्श्वस्थः पृच्छति—'कहुडा कवण'—कनिष्ठः कतमः?, उत्तरम्—'हौं'—

अहम् । एवमन्या अपि लिङ्ग-संख्या-पुरुषविशिष्टस्य लिङ्गार्थस्योक्तय ऊह्याः । एवं केवल-लिङ्गार्थोक्तिः ।

अथ क्रियाया मात्रविवक्षायामुक्तयो यथा – 'अहो काह ईहां कीजए' – भोः किमेतदिह क्रियते; अथवा 'व्यापरिअ' – व्याप्रियते ?, उत्तरम् – 'पढिअ' – पठ्यते; अथवा 'पैअ' – पच्यते; अथवा 'खेलिअ' – खेल्यते; क्रीड्यते वा । 'काह इंहां तूं करसि' – किमत्र त्वं करोषि ?, 'पअउं' – पचामि । 'काह इंहां करहु' – किमत्र कुरुथः ? [ ] पठावः । किमत्र कुरुथ [ ] पठामः । 'काह कीजत आच्छ' – किं क्रियमाणमास्ते ?, पच्यमानम् । 'काह करत आच्छिअ' – किं कुर्वता स्थीयते, आस्यते वा, पचता । एवमादि वर्त्तमाने ॥ छ ॥ [ प० २६-१ ]

अथातीते – 'अरे एति बार तें काह किअ तांहा' – अहो एतावतीं वेलां किमकारि तत्रैव ?, 'पढा' – अपाठि, पठितं वा; [ पआ ? ] अपाचि, पक्वं वा । 'काह करत आच्छे' – किं कुर्वता स्थितम् ?, 'पढत' – पठता । 'पयन्त' – पचता ।

अथैष्यति – 'काह करिहसि' – किं करिष्यसि ?, 'पढिहउं' – पठिष्यामि । 'ओलगिह-उं' – अवलगिष्यामि । 'काह करणिहार आच्छसि' – किं करिष्यंस्तिष्ठसि, किं कर्तुकामो वा ?, 'पढणिहार' – पठिष्यन्, पठितुकामो वा । 'काह करत आछीहसि' – किं कुर्व्वन् स्थास्यसि ?, 'पढत' – पठन् । 'काह करणे(णि ?)हारें आछिअ' – किं करिष्यमाणेनास्यते ?, 'पढणि-हारें' – पठिष्यमाणेन । 'काह करब' – किं करिष्यते ?, 'पढब' – पठिष्यते, वक्ष्यते वा । एवमितरधातवोऽपि यथेष्टं प्रयोज्याः । 'काह करि, काह करत आच्छसि ?, रांधि जेमत आच्छउं' – किं कृत्वा कुर्व्वन्नसि ?, राद्ध्वा पक्त्वा वा जिंवन्नसि, भुञ्जानो वा । 'काह करि काह कीज हो ?, पइ जेंविअ' – किं कृत्वा, किं क्रियते ?, पक्त्वा जिव्यते, भुज्यते वा । 'काह इंहां कीज ?, पै पै षाज' – किमत्र [ प० २६-२ ] क्रियते । पक्त्वा पक्त्वा खाद्यते; पाचं पाचं वा खाद्यते । 'काह ईहा कर ?, जेंवि जेंवि जा' – किमत्र करोति ?, जिम्वित्वा जिम्वित्वा याति; अथवा भोजं भोजं व्रजति । 'काह करण, किंह, काह करत आच्छसि, आछिअ वा, काह कीज वा' – किं कर्तुं, किं कुर्वंस्तिष्ठति, कुर्वता स्थीयते वा, किं क्रियते वा । 'जेंउंवे किहं राधत आच्छउं, आच्छिअ राझ' – जिंवितुं राध्यता स्थीयते, भोक्तुं पचता वा, भोक्तुं पच्यते वा । 'काह करत, काह करसि' – किं कुर्वन्, किं करोषि ?, 'पढत रांधउं' – पठन् राध्नोमि, पचामि वा । 'काह करत, काह कीज ?, पअंत पढिअ' – किं कुर्वता, किं क्रियते ?, पचता पठ्यते । एवं युगपत्क्रियमाणयोः क्रिययोर्गौणमुख्यभावे । तं विना तु, किं किं क्रियते – 'काह काह कीज ?, पइअ, पढिअ' – पच्यते पठ्यते । एतद् दिङ्मात्रम् । एवमन्येऽपि क्रियामात्रविवक्षायां सपल्लवा उक्तय ऊह्याः । एवं केवलक्रियोक्तिः ।

अथ केवलकर्तृविवक्षायामुदाह्रियते । स च कर्ता द्विविध ऊह्यार्थः, उक्तश्चानुक्तश्च ।

तत्र चोक्तस्य कर्तुर्लिङ्गा[प० २७-१]र्थादयं विशेषो यदयमुक्तकर्तृशक्तिकः क्रियासंबन्धः प्रयुज्यते। लिङ्गार्थस्तु स्वरूपेणैव। 'को ए सोअ'—क एष स्वपिति शेते वा। 'को ए सोअन्त आच्छ'—क एष स्वपन्नास्ते, शयानो वा?, उत्तरम् 'पहारी'—प्रहर[क]दाता। 'केइं ए सोविअ'—केनैतत् सुप्यते, शय्यते वा?, 'पहारी'—प्रहरकदात्रा। 'को ए रांध'—क एष राध्यति, 'को ए रांधत आच्छ'—क एष राध्यन्नास्ते, पचन् वा?, सूपकारः। केवा राध्यति?, सूपकारी। किमेतत् पचति? व्यञ्जनम्। सूपकारकुलम्। 'केइं ताहां जेंउंअ'—कस्तत्र बुभुजे, अजिवद् वा?, क्व(?) ब्राह्मणः। 'को ताहां जेंवत आछ'—कस्तत्र भुञ्जन आसीत्?, द्विजः। 'इंहां को पढिह'—अत्र कः पठिष्यति?, द्विजात्मजः। 'इंहा को पढणिहार आछ'—अत्र कः पठिष्यन्नास्ते?, छात्रः। 'अम्हपास केइं पढव'—अस्मत्तः केन पठितव्यम्, अस्माकं पार्श्वे वा?, द्विजसुतेन। एवं द्वित्व-बहुत्वयोरपि। गुरुं शिष्यः पृच्छति—'राउलें पाहु रांध को आच्छिह'—राजकुलचरणानां संनिधौ कः स्थास्यति?, गुरोरुत्तरम् 'तूं'—त्वम्। 'मोर क्षेम को करिह'—मम क्षेमं कः करिष्यति?, [प० २७-२] उत्तरम् 'हौं'—अहम्। एवमन्या अपि पल्लवस्य कर्तुरुक्तय ऊह्याः। एवं केवलकर्तुरुक्तिः।

अथ हेतुकर्तुर्विवक्षायामुदाह्रियते। 'कवण ए छाती तडें (?) राकर सागर औडहूपास स्रणावन्त आच्छ'—क एष धृतच्छत्रो राजसागरमुद्रैः स्नानयति, स्नानयन्नास्ते?, सूरपालो नाम राजपुरुषः। 'केंइं ए देउलु कराविअ'—केनैतद् देवकुलं कार्यते?, 'करांवित आच्छ'—कार्यमाणमास्ते?, धनपालेन। 'केई ए ईहां बाम्हण थापे'—क इहैतान् ब्राह्मणान् स्थापयामास?, गोविन्दचन्द्रदेवः॥ छ॥ 'हो इह कोउ जो कनमेरुतुल्ल प्रासादु कराविह'—भविष्यति कोऽपि यः कर्णमेरुतुल्यं प्रासादं कारयिष्यति?, 'राजा जइ कोउ'—राजा यदि कश्चित्। सुपुत्रः पृच्छति—'अहो पितरहो को तुम्ह तारिह'—अहो पितरः को युष्मांस्तारयिष्यति?, उत्तरम् 'तुहिं'—त्वमेव। पुनः पृच्छति—'मोंहिं तर्हि के वढाविहंति'—मम तर्हि के संवर्द्धयितारः?, उत्तरम् 'अम्हेइ'—वयमेव। एवमन्या अपि हेतुकर्तुरुक्तय ऊह्याः। एवं हेतुकर्तुरुक्तिः।

अथ केवलकर्म्मविवक्षायामु [प० २८-१] दाह्रियते। तच्च कर्म्म द्विविधमुक्तमनुक्तं च। तत्रोक्तस्य कर्म्मणो लिङ्गार्थादयं विशेषो यदुक्तकर्मशक्तिकः क्रियासंबन्धः प्रयुज्यते, लिङ्गार्थस्त्वव्यतिरिक्तः स एव। तद्यथा—'अहो काह ए सुआरे वेंटलि किएं रांध'—भोः किमसौ सूपकारः कृतसि(शि)रोवेष्टनो राध्यति?, 'भातु'—भक्तम्, ओदनं वा। 'काह पचन्त आछ'—किं पचन्नास्ते?, 'पुप'—अपूपान्। 'ए जोइ काह इंहां रांध'—इयं युवती(तिः) किमत्र राध्यति? व्यञ्जनम्। 'ए कहार काह संपाडति'—एतौ काहारौ किमत्र संपादयतः, एते काहारा वा किमत्र संपादयन्ति?, 'इंधणपाणि'—इन्धनोदकम्। 'काह जेंवित आच्छ'—किं भुज्यमानमास्ते?, 'काह जेंविअ'—किं भुज्यते?, 'पिप सांकरे सेंउ

सातु' – सच्चुतस(श)र्कराः सक्तवः । कृस(श)रा वा, पायसं वा । 'बेटा काहां गा' – बेटकः किं जगाम, गतवान् वा । कन्या तु गतवती । 'ओझाउल' – उपाध्यायगृहम् । 'पडवसी-कर घरु' – प्रतिवेशिनो गृहम् । भृत्यः स्वामिनं पृच्छति – 'पहरें को ईहां धरिहंति राउल'– प्रहरके कि(कः)मत्र नियोक्ष्यन्ति चरणाः ?, 'तोहि' – त्वामेव । 'राउलं को धरव' – चरणैः ५ को धर्तव्यः ?, 'तुहीं' – त्वमेव । [प० २८-२] 'विआलि को हउं मागिहउं' – विकालिकां कमहं याचिष्ये ?, 'अम्हे' – आ(अ)स्मानेव । 'को मै भोजन मागव' – को मया भोजनं याचितव्यः ?, 'अम्हेइ' – वयमेव । एवमन्या अपि सपल्लवस्य कर्मण उक्तय ऊह्याः । इति कर्मोक्तिः ॥ छ ॥

अथ करणविवक्षायामुक्तय उदाह्रियन्ते – 'देउ काहें धाए' – देवं केन ध्यायति ?, १० 'मने' – मनसा । 'नइ काहें पव(तः)रिसि' – नदीं केन प्रतीर्णवान् ?, 'बाहन्हे(हु ?)' – बाहुभ्याम् । 'छांटेहें काहें विद्या अवइ' – सत्वरं कया विद्या आपद्यते ?, 'प्रज्ञै' – प्रज्ञया ।

अथवा वृत्तैरुदाह्रियते । तद्यथा –

दुर्जयो जायते वीरः केन संग्रामसंकटे ? – खड्गेन ।

सन्तरन्ति नदीं धीरा[ः] काभ्यां साहसशालिनः ? – बाहुभ्याम् ।

१५ जगत् क्षीरार्णवे मग्नमिव कैर्जायते निशि ? – शरच्चन्द्रकरैः । एवं पुंसि ॥

निकृत्तचरणस्तूर्णं पथि याति कयैकया ? – काष्ठघोटिकया ।

ग्रीष्मसंतप्तभूपृष्ठे काभ्यां संचर्यते जनैः ? – उपानद्भ्याम् ।

पर्जन्यः कुरुते विश्वं काले काभि[ः] पुनर्नवम् ? – वृष्टिभिः । एवं स्त्रियाम् ॥

कुलालैर्नीयते केन मृत्पिण्डोऽपि च पात्रताम् ? – चक्रेण ।

२० काभ्यामालोकये[त्] लोकः कार्यजातमहर्निशम् ? [प० २९-१] – नेत्राभ्याम् ।

अपि बालनृपं राज्यं वर्त्तते कैर्दृढव्रतैः ? – पात्रैः । एवं नपुंसके ॥

एता एव च क्रिया अतीतानागतयोरप्युदाहार्याः ।

सेनापतिः पतिं ब्रूते नाथ केन जयस्यरीन् ? – त्वया । एवं युष्मदि ।

पुनः पृच्छति –

२५ केनैताः संपदो नित्यं जायन्ते मे नवा नवाः ? – मया । इत्यस्मदि ।

एवमन्या अपि सपल्लवाः करणोक्तयः ऊह्याः । एवं करणोक्तिः ॥ छ ॥

अथ केवलसंप्रदानविवक्षायामुदाह्रियते । यथा – 'ए बेटी काहि देवि' – इयं कन्या कस्मै देया ?, उत्तरं श्लोकेन –

सजातीयाऽसगोत्राय योग्याय गुणिनेऽर्थिने ।

३० मातापित्रोः पञ्चसप्तशाखान्तरितजन्मने ॥

उपस्थितं महत् पर्व्व वित्तं न्यायार्जितं च मे ।
पृष्टः कस्मै ददामीति पात्रायेत्युत्तरं वदेत् ॥
यस्मै यद्रोचते विप्रास्तेन तत् कथ्यतामिह ।
इत्युक्त्वा वाञ्छितं तेभ्यो दत्तमक्षयमुच्यते ॥
यस्मै धारयते वित्तमात्तं संकल्पितं धृतम् ।
तस्मै तदखिलं दद्याद् ऋणशेषं न धारयेत् ॥
पात्रापात्रकथा देव-पितृकृत्ये विचार्यते ।
वित्ते सत्यर्थिने देयमिति मह्यं तु रोचते ॥
वृद्धौ मातापितरौ भार्यापत्यादिसन्ततिर्दासाः । [प० २९-२]
सजातिश्च दरिद्रः पोष्यास्तेभ्यः सदा देयम् ॥

ब्राह्मणेभ्योऽत्र दीयते । गम्यतां विप्राः, ब्राह्मण्यै ग्रासाच्छादनं दीयते । काले क्षेत्रे च पात्राय सर्व्वस्वमपि न धर्त्तव्यम् । विप्रेभ्यः पर्शुरामः पृथ्वीमेव प्रादात् । गयायां पित्रे पिण्डं सत्पुत्रः प्रदास्यते । एवमन्या अपि सपल्लवाः संप्रदानोक्तय ऊह्याः । इति संप्रदानोक्तिः ॥ छ ॥

अथ केवलापादानविवक्षायामुदाह्रियते । यथा — 'काहां हु(हुं)त ए पुरुषु आ' — कस्मादयं पुरुष आगतः ?, 'कनउजं' — कन्यकुब्जात् । 'मीत काहां हुंत एतें कालें' — सखे ! कुतस्त्वमियता कालेन ? । 'ववहरेकरिं कांटीं' — धनिककारायाः, व्यवहरककंटिकातो वा । 'कैसें तौ तो छूटेसि' — कथं तस्या मुक्तोऽसि ?, 'मीतकर लइ देइ' — मित्राद् गृहीत्वा दत्त्वा च । दुर्जनाद् भीतस्य वरं ससर्प्पव्याघ्रं वनम्, न तु ससर्प्पव्याघ्राद् वनाद् भीतस्य सदुर्जनग्रामवासः । सखे ! कुतोऽधीतवेदोऽसि ?—देवशर्मोपाध्यायात् । ज्ञातरन्धनविधिः कुतः ?—उपाध्यायिन्याः । ग्रासस्ते कुत आसीत् ?—द्विजवर्यगृहेभ्यः । चिरेण दृष्टान् शिष्यानाहूय गुरुः [प० ३०-१] पृच्छति — पुत्राः जानीथ कुतोऽधीतवेदा यूयम् ?, उत्तरम् — युष्मत्तः । पुनः पृच्छति — कुतः तर्ह्यस्माकं सपुत्रदाराणामिदानीं वृद्धावस्थानिर्वृत्तिः ?, उत्तरम् — अस्मत्तः । एवमन्या अपि लिङ्ग-संख्या-पुरुषभिन्ना अपादानोक्तय ऊह्याः । इत्यपादानोक्तिः ॥ छ ॥

अथाधिकरणविवक्षायामुदाह्रियते । तद्यथा —

भूमौ मर्त्यास्तिले तैलं तरुण्यां रूपसंपदः ।
आधेयं सर्व्वमाधारे निराधारो न विद्यते ॥
कस्मिन् देवगणा ननु(नु ?) नित्यम् ?—स्वर्गे ।
कुत्र सदा गृहिणां स्थितिरिष्टा ?—गृहे ।
भार्ये ! कुत्र रतिस्तव नित्यम् ?—त्वयि ।
भर्त्तः ! कुत्र सदैव मनो मे ?—मयि ।

विद्वन्! भवतः कुत्र निवासः?—वाराणस्यां गङ्गातीरे।
कस्मिन् दानम्, कुत्र विवाहः?—द्विजवरवंशे नागरजातौ॥
सूपकर्त्ता स्थितः पीठे चुल्ल्यां स्थाल्यां महानसे।
ज्वलद्वह्नौ तप्ततोये मध्याह्ने तन्दुलान् पचेत्॥

सप्ताधिकरणमुदाहरणम्। एवमन्या अप्यधिकरणोक्तय ऊह्याः। इत्यधिकरणोक्तिः॥ छ॥
अथ केवलसंबन्धोक्तावुदाह्रियते। यथा—

कस्यैतद् गृहमुन्नतं क्षितिपतेस्तस्यैव राज्ञः पुनः,
सौवर्णाण्डकमण्डितोन्नतशिखं पश्यैतदस्यान्तिके। [प० १०-२]
यस्येयं वसुधा सुधाधवलिता कीर्तिश्च शौर्यार्जिते(ता),
श्रीगोविन्दनृपस्य तस्य सुतरामायुश्चिरं वर्द्धताम्॥ छ॥
स्वर्गः सुराणां पाताललोकश्चैव फणाभृताम्।
श्रीमद्गोविन्दचन्द्रस्य निःशेषं वसुधातलम्॥
धनदस्य धनं भानोः प्रतापो धिषणागुरोः।
गोविन्दनृपतेस्त्वेतत् त्रयमप्यमितं मतम्॥
वद नीरप्रिये कस्य खड्गक्रीडार्जिताः स्त्रियः।
तव वल्लभ पूर्णेन्दुवदनो यः पित(पति°)र्मम॥ ९॥

एवमन्या अपि लिङ्गादिविशिष्टसंबन्धस्योक्तय ऊह्याः। इति संबन्धोक्तिः॥ छ॥
एवमेकैकविवक्षायां नवैवोक्तयः। अथ द्व्याद्युक्तिभेदप्रस्तारार्थं वृत्तं सूत्रम्—

आद्यमाद्यमितरेषु निक्षिपेदुक्तिभेदविषये द्वयोर्द्वयोः।
आद्यहीनयुगलेष्वथादिमं निक्षिपेत् त्रिचतुरादिभित्तये॥

अयमर्थः—लिङ्गार्थः, क्रिया, कर्त्ता, कर्म्म, करणम्, संप्रदानम्, अपादानम्, [अधिकरणम्] संबन्धः—इत्यमी नव पदार्थाः। एषां चैकैकस्य संक्षिप्ता उक्तयो यथा—

कोऽयम्?—छात्रः। १॥
किं करोति?—पठति। २॥
कः पठति?—अयमेव। ३॥
किं पठति?—शास्त्रम्। ४॥
केन पठति?—पुस्तकेन। ५॥
कस्मै पठति?—आत्मने। ६॥
कुतः पठति?—उपाध्यायात्। ७॥ [प० ११-१]
क्व स्थितः पठति?—गृहे। ८॥
कस्य?—उपाध्यायस्यैव। ९॥ एवं नव॥ *॥

द्वयोर्द्वयोश्चोक्त्यर्थमाद्यमाद्यमितरेषु द्वितीयादिषु योजयेत् । तद् यथा—प्रथमे लिङ्गार्थे द्वितीयादिषु योजिते या(जा)ता लिङ्गार्थेनाष्टौ भेदाः । यथा—

लिङ्ग-क्रिये । १ ॥
लिङ्ग-कर्त्तारौ । २ ॥
लिङ्ग-कर्मणी । ३ ॥
लिङ्ग-करणे । ४ ॥
लिङ्ग-संप्रदाने । ५ ॥
लिङ्ग-अपादाने । ६ ॥
लिङ्ग-अधिकरणे । ७ ॥
लिङ्ग-संबन्धो(न्धौ) । ८ ॥ एवं लिङ्गार्थेनाष्टौ ॥ * ॥

अथ द्वितीयां क्रियां त्रि(तृ)तीयादिषु निक्षिप्य कृताः सप्त भेदाः । यथा—

क्रिया-कर्त्तारौ । १ ॥
क्रिया-कर्मणी । २ ॥
क्रिया-करणे । ३ ॥
क्रिया-संप्रदाने । ४ ॥
क्रिया-ऽपादाने । ५ ॥
क्रिया-ऽधिकरणे । ६ ॥
क्रिया-संबन्धाविति । ७ ॥
—एवं क्रियया सप्त, आद्यैः सह पञ्चदश ॥ १५ ॥

अथ त्रि(तृ)तीये कर्तरि चतुर्थादिषु योजिते षडुक्तयः । यथा—

कर्तृ-कर्मणी । १ ॥
कर्तृ-करणे । २ ॥
कर्तृ-संप्रदाने । ३ ॥
कर्तृ-अपादाने । ४ ॥
कर्तृ-अधिकरणे । ५ ॥
कर्तृ-संबन्धाविति । ६ ॥
—एवं कर्त्रा षट् । पूर्वैः सहैकविंशतिः ॥ २१ ॥

अथ चतुर्थे कर्मणि पञ्चमादिषु क्षे(क्षि)ते पञ्चोक्तयः । यथा—

कर्म-करणे । १ ॥
कर्म-संप्रदाने । २ ॥
कर्म-अपादाने । ३ ॥

कर्म-अधिकरणे । ४ ॥

कर्म-संबन्धाविति । ५ ॥

—एवं कर्मणा पञ्च, [प० ३१-२] पूर्वैः सह षड्विंशतिः ॥ २६ ॥

अथ पञ्चमे करणे अपादानादिषु योजिते चत्वारो भेदाः । यथा—

5 करण-संप्रदाने । १ ॥

करण-अपादाने । २ ॥

करण-अधिकरणे । ३ ॥

करण-संबन्धाविति । ४ ॥

—एवं करणेन सह चत्वारः, पूर्वैः सह तृं(त्रिं)शत् ॥ ३० ॥

10 अथ षष्ठे संप्रदाने सप्तमादिषु क्षिप्ते त्रयो भेदाः । यथा—

संप्रदान-अपादाने । १ ॥

संप्रदान-अधिकरणे । २ ॥

संप्रदान-संबंधाविति । ३ ॥

—एवं संप्रदानेन सह त्रयः, पूर्वैः सह त्रयस्त्रिंशत् ॥ ३३ ॥

15 अथ सप्तमे अपादानेऽष्टम-नवमयोः क्षिप्ते भेदद्वयम् । यथा—

अपादान-अधिकरणे । १ ॥

अपादान-संबन्धौ । २ ॥

—एवं अपादानेन द्वौ, पूर्वै[:] सह पञ्चतृं(त्रिं)शत् ॥ ३५ ॥

अथाष्टमे अधिकरणे नवमे क्षिप्ते सत्येकः । यथा—

20 अधिकरण-संबन्धाविति । १ ॥

—एवमधिकरणेनैक एव, आद्यैः सह षट्त्रिंशत् । ३६ ॥

एवं द्वयोर्द्वयोर्विवक्षायां षट्त्रिंशदेवोक्तिभेदाः ॥ छ ॥

अथैषां क्रमेणोदाहरणानि, यथा—

'को ए काह कर'—कोऽयं किं कुरुते ?, छात्रोऽयं पठति । १ ।

25 'ए को इहां को पढ'—एष कः, कश्चेह पठति ?, छात्रोऽयमेव ये(ए)व । २ ।

'को ए काह इहां पढ'—क एष किमत्र पठति ?, छात्र[:] शास्त्रम् । ३ ।

'को ए काहें पढ'—कोऽयं केन पठति ?, [प० ३२-१] छात्रः पुस्तकेन । ४ ।

'को ए का किहं पढ'—क एष कस्मै पठति ?, छात्रः लक्ष्मै । ५ ।

'को ए का पास पढ'—क एष कुतः पठति ?, छात्र उपाध्यायात् । ६ ।

30 'को ए काहां पढ'—क एष कुत्र पठति ?, छात्रो गृहे । ७ ।

'को ए ककरें घरं पढ'—क एष कस्य गृहे पठति ?, छात्रो गुरोः । ८ ।

—एवं लिङ्गार्थेनाष्टावुक्तयः ॥ छ ॥

अथ क्रियया सप्त यथा—

'काह ईहां कीज केइ'—किमत्र क्रियते केन ?, पठ्यते छात्रेण । ९ ।

'काह करत ईहां काह पढिअ'—किं कुर्वताऽत्र किं पठ्यते ?, गुरुशुश्रूषां शास्त्रम् ।१०।

'काह करत काहें पढिअ'—किं कुर्वता केन पठ्यते ?, गुरुशुश्रूषां पुस्तकेन । ११ ।

'काह करत का किह पढिअ'—किं कुर्वता कस्मै पठ्यते ?, गुरुशुश्रूषां आत्मने । १२ ।

'काह करत का पास पढिअ'—किं कुर्वता कुतः पठ्यते ?, गुरुशुश्रूषामुपाध्यायात् । १३ ।

'काह करत काहा पढिअ'—किं कुर्वता कुत्र पठ्यते ?, गुरुशुश्रूषां गृहे । १४ ।

'काह करत काकरें पढिअ'—किं कुर्वता कस्य गृहे पठ्यते ?, गुरुशुश्रूषां गुरोः । १५ । 10

—एवं क्रियया सप्त ॥ छ ॥

अथ कर्त्रा षट् यथा—

'को ईहां काह पढ'—कोऽत्र किं पठति ?, छात्रः शास्त्रम् । १६ । [पृ० १२-२]

'को काहें पढ'—कः केन पठति ?, छात्रः पुस्तकेन । १७ ।

'को ईहां का किहं पढ'—कोऽत्र कस्मै पठति ?, छात्र आत्मने । १८ । 15

'को ईहां का पास पढ'—कोऽत्र कुतः पठति ?, छात्र उपाध्यात् । १९ ।

'को ईहां काहां पढ'—कोऽत्र कुत्र पठति ?, छात्र आश्रमे । २० ।

'को ईहां ककरें आश्रम पढ'—कोऽत्र कस्याश्रमे पठति ?, छात्रो गुरोः । २१ ।

—एवं कर्त्रा षट् ॥ छ ॥

अथ कर्मणा पञ्चोक्तयो यथा— 20

'काह ईहां पढिअ काहे'—किमत्र पठ्यते केन ?, शास्त्रं पुस्तकेन । २२ ।

'काह पढिअ का किहं'—किं पठ्यते कस्मै ?, शास्त्रमात्मने । २३ ।

'काह पढिअ का पास'—किं पठ्यते कुतः ?, शास्त्रमुपाध्यायात् । २४ ।

'काह पढिअ काहां'—किं पठ्यते कुत्र ?, शास्त्रमास(श्र)मे । २५ ।

'काह पढिअ ककरें'—किं पठ्यते कस्याश्रमे ?, शास्त्रं गुरोः । २६ । 25

—एवं कर्म्मणा पंच ॥ छ ॥

अथ करणेन चतस्र उक्तयो यथा—

'काह ईहां पढिअ का किहं'—केनाऽत्र पठ्यते कस्मै ?, पुस्तकेन स्वस्मै । २७ ।

'काहें पढिअ का पास'—केन पठ्यते कुतः ?, पुस्तकेनोपाध्यायात् । २८ ।

'काहें पढिअ काहां'—केन पठ्यते कुत्र ?, पुस्तकेनाऽऽश्रमे । २९ । 30

'काहें पढिअ ककरें'—केन पठ्यते कस्याश्रमे ?, [पृ० १३-१] पुस्तकेन गुरोः । ३० ।

—एवं करणेन चतस्रः ॥ छ ॥

अथ संप्रदानेन तिस्र उक्तयो यथा—

'का किहं पढिअ का पास'—कस्मै पठ्यते कुतः ?, आत्मन उपाध्यायात् । ३१ ।

'का किहं पढिअ काहां'—कस्मै पठ्यते कुत्र ?, आत्मने गृहे । ३२ ।

'का किहं पढिअ ककरें'—कस्मै पठ्यते कस्य गृहे ?, स्वस्मै गुरोः । ३३ ।

—एवं संप्रदानेन तिस्रः ॥ छ ॥

अथापादानेन द्वे यथा—

'का पास पढिअ काहां'—कुतः पठ्यते कुत्र ?, उपाध्यायाद् वाराणस्याम् । ३४ ।

'कातौ पढिअ ककरें घर'—कुतः पठ्यते गृहे कस्य ?, उपाध्यायाद् गुरोः । ३५ ।

—एवमपादानेन द्वे ॥ छ ॥

अथाधिकरणेनैकैवोक्तिर्यथा—

'काहां पढिअ ककरें घर'—कुत्र पठ्यते कस्य गृहे ?, वाराणस्यामुपाध्यायस्येति । ३६ ।

—एवमधिकरणेनैकैव ॥ छ ॥

एवं द्वयोर्द्वयोर्विवक्षायां षट्त्रिंशदेवोक्तयः । एवमेव त्रयाणां त्रयाणां विवक्षायां चतुरशीतिरुक्तयः । तदुत्पत्तिश्चैवम्—पूर्वोक्तद्विकेषु प्रथमं लिङ्गार्थं विना ये द्विका नवमादयस्तेष्वाद्ये योजिते अष्टाविंशतिस्त्रिभेदा लिङ्गार्थेन भवन्ति । द्वितीयेन च धात्वर्थेन रहितेषु षोडशादिषु द्विकेषु द्वितीये जो(यो)जिते सत्येकविंशति-[प० १३-२] स्त्रिभेदा धात्वर्थेन भवन्ति । पूर्वैः सहैकोनपञ्चाशत् । ४९ । ततस्तृतीयेन कर्त्रा न(र)हितेषु द्वाविंशादिषु द्विकेषु तृतीये क्षिप्ते पञ्चदश त्रिभेदाः कर्त्रा भवन्ति । पूर्वैः सह चतुःषष्टिः । ६४ । ततश्चतुर्थेन कर्मणा रहितेषु सप्तविंशादिषु द्विकेषु चतुर्थे क्षिप्ते दश त्रिभेदाः कर्मणा भवन्ति । पूर्वैः सह चतुःसप्ततिः । ७४ । ततः पञ्चमेन करणेन रहितेषु त्रिंशादिद्विकेषु पञ्चमे क्षिप्ते षट् त्रिभेदाः करणेन भवन्ति । पूर्वैः सहाशीतिः । ८० । ततः षष्ठेन संप्रदानेन रहितेषु चतुस्त्रिंशादिषु षष्ठे क्षिप्ते त्रयस्त्रिभेदाः संप्रदानेन भवन्ति । पूर्वैः सह त्र्यशीतिः । ८३ । ततः सप्तमेनापादानेन रहिते षट्त्रिंशद् द्विके सप्तमे क्षिप्ते अपादानेनैकस्त्रिभेदः । पूर्वैः सह चतुरशीतिः । ८४ । अनेनैव च क्रमेण चतुरादीनामपि पूर्वोक्तसंख्याभेदोत्पत्तिर्ज्ञेया । ग्रन्थविस्तरभयात् नैकैकमुदाहरणमादिभेदानां दर्श्यते । तद् यथा—तत्र त्रिविकल्पार्थे पूर्वपूर्वेण सहानन्तरयोर्विवक्षायां सप्तोक्तयः । यथा—[प० १४-१]

'को ए ईहां, को काह कर'—कोऽयमत्र कस्य किं करोति ?, छात्रोऽयमस्यात्र पठति । १ ।

'काह करत को ईहां काह पढ'—किं कुर्वन् कोऽत्र किं पठति ?, गुरुसेवां छात्रः शास्त्रम् । २ ।

'ईहां को काह काहें पढ'—अत्र कः किं केन पठति ?, छात्रः शास्त्रं पुस्तकेन । ३ ।

'काह काहें का किह छात्र पढ' —किं केन कस्मै छात्रः पठति ?, शास्त्रं पुस्तकेनात्मने । ४ ।
'काहें का किंह का पास छात्र ईहां पढ' —केन कस्मै कुतश्छात्रोऽत्र पठति ?,

—पुस्तकेनात्मने गुरोः । ५ ।

'का किंह का पास काहां छात्र ईहां पढ' —कस्मै कुतः कुत्र छात्रोऽत्र पठति ?,

—आत्मने उपाध्यायाद् आश्रमे । ६ । 5

'का पास काहां काकरें मढ छात्र ईहां पढ' —कुतः कुत्र कस्य मठे छात्रोऽत्र पठति ?,

—उपाध्यायात् केदारस्य मठे । ७ ।

—एवमन्या अपि त्रिविवक्षोक्तयश्चतुरशीतिसंख्याः प्रयोज्याः ॥ छ ॥

अथ चतुर्णां विवक्षायामुक्तयो लिख्यन्ते —तत्र पूर्वेण पूर्वेणानन्तरेषु त्रिषु युक्तेषु षडुक्तयः । यथा — 10

'को ए काह करत को ईहां काह कर' —कोऽयं किं कुर्वन् कोऽत्र किं पठति ?,

—छात्रोऽयं गुरुसेवामसावत्र शास्त्रम् । १ ।

'काह करत को काह कर काहें' —किं कुर्वन् कः किं पठति केन ?,

—गुरुसेवां छात्रः शास्त्रं पुस्तकेन । २ ।

'को ईहां काह पढ काहें का किह' —कोऽत्र [प० ३४-२] किं पठति केन कस्मै ?, 15

—छात्रः शास्त्रं पुस्तकेनात्मने । ३ ।

'काह काहें का किह का पास छात्र [ईहां] पढ' —किं केन कस्मै कुतः छात्रोऽत्र पठति ?,

—शास्त्रं पुस्तकेनात्मने उपाध्यायात् । ४ ।

'काहें का किंह का पास काहां छात्र [ईहां] पढ' —केन कस्मै कुतः कुत्र छात्रोऽत्र पठति ?,

—पुस्तकेनात्मने गुरुतो मठे । ५ । 20

'का किहं का पास काहां काकरें छात्र पढ' —कस्मै कुतः कुत्र कस्य मठे छात्रः पठति ?,

—आत्मने पण्डिताद् वाराणस्यां केदारस्य । ६ ।

—एवमन्या अपि चतुर्विवक्षोक्तयः षड्विंशत्यधिकशतसंख्याः प्रयोज्याः ॥ छ ॥

अथ पञ्चानां विवक्षायामुक्तयो लिख्यन्ते । तत्र, पूर्व्वेण पूर्व्वेणानन्तरेषु चतुर्षु युक्तेषु पञ्चोक्तयः । यथा — 25

'को ए काह करत ईहां को काह कर काहें' —कोऽयं किं कुर्व्वन्नत्र कः किं करोति केन ?,

—छात्रोऽयं गुरुसेवां पठत्यत्र पुस्तकेन । १ ।

'को ईहां काह करत काह पढ काहें का किहं' —कोऽत्र किं कुर्व्वन् किं पठति केन कस्मै ?,

—छात्रो गुरुसेवां शास्त्रं पुस्तकेनात्मने । २ ।

'को ईहां काह पढ काहें का किंह का प(पा)स' — कोऽत्र किं पठति केन कस्मै कुतः ?,
— छात्रः शास्त्रं पुस्तकेनात्मने पण्डितात् । ३ ।

'छात्रु ईहां काह पढ काहें का किंह का [प० १५-१] पास कांहां' — छात्रोऽत्र किं पठति केन कस्मै कुतः कुत्र ?, शास्त्रं पुस्तकेनात्मने पण्डिताद् वाराणस्याम् । ४ ।

5 'काहें का किह का पास काहां काकरें घर छात्र [ ईहां ] पढ' — केन कस्मै कुतः कुत्र कस्य गृहे छात्रोऽत्र पठति ?, पुस्तकेनात्मने पण्डितात् कन्यकुब्जे गुरोः । ५ ।

— एवमादयो अन्या अपि पञ्चविवक्षोक्तयः षड्विंशशतसंख्याः प्रयोज्याः ॥

अथ षण्णां विवक्षायामुक्तयो लिख्यन्ते । तत्र, पूर्व्वेण पूर्व्वेण परेषु पञ्चसु युक्तेषु चतस्र उक्तयः । यथा —

10 'को ए काह करत को ईहां काह पढ कांहें का किंह ?' — कोऽयं किं कुर्व्वन् कोऽत्र पठति केन कस्मै ?, छात्रोऽयं गुरुसेवामयमत्र शास्त्रं पुस्तकेनात्मने । १ ।

'को ईहां काह करत काह पढ काहें का किंह का पास' — कोऽत्र किं कुर्व्वन् किं पठति केन कस्मै कुतः ?, छात्रो गुरुसेवां शास्त्रं पुस्तकेनात्मने पण्डितात् । २ ।

'को ईहां काह पढ काहें कां किंह का पास काहां' — कोऽत्र किं पठति केन कस्मै कुतः
15 कुत्र ?, छात्रः शास्त्रं पुस्तकेनात्मने पण्डितात् प्रयागे । ३ ।

'छात्र ईहां काह पढ काहें का किह का पास काहां ककरें घर' — छात्रोऽत्र किं पठति केन कस्मै कुतः कुत्र कस्य गृहे ?, शास्त्रं पुस्तकेनात्मने पण्डितात् प्रयागे [प० १५-२] द्विजस्य । ४ ।

— एवमादयो अन्या अपि षड्विवक्षोक्तयश्चतुरशीतिसंख्याः प्रयोज्याः ॥ छ ॥

20 अथ सप्तानां विवक्षायामुक्तयो लिख्यन्ते । तत्र, पूर्वेण पूर्वेणानन्तरेषु षट्सु युक्तेषु तिस्र उक्तयः । यथा —

'को ए काह करत को ईहां काह पढ कांहें कां किंह का पास' — कोऽयं किं कुर्वन् कोऽत्र किं पठति केन कस्मै कुतः ?, छात्रोऽयं गुरुसेवामसौ शास्त्रं पुस्तकेनात्मने पण्डितात् । १ ।

'काह करत को ईहां काह पढ केईं का किंह का पास कांहां' — किं कुर्वन् कोऽत्र किं
25 पठति केन कस्मै कुतः कुत्र ?, गुरुसेवां छात्रः शास्त्रं पुस्तकेनात्मने पण्डितादाश्रमे । २ ।

'को ईहां काह पढ काहें कां किंह का पास काहां ककरें' — कोऽत्र किं पठति केन कस्मै कुतः कुत्र कस्य ?, छात्रः शास्त्रं पुस्तकेनात्मने पण्डितादाश्रमे ब्राह्मणस्य । ३ ।

— एवमादयो अन्या अपि सप्तविवक्षोक्तयः षट्त्रिंशत्संख्याः प्रयोज्याः ॥ छ ॥

अथाष्टानां विवक्षायामुक्तयो लिख्यन्ते । तत्र, पूर्वेण परेषु सप्तसु युक्तेषु द्वे उक्ती यथा—

'को ए काह करत को ईहां काह पढ काहें का किह का पासु काहां'—कोऽयं किं [प० १६-१] कुर्वन् कोऽत्र किं पठति केन कस्मै कुतः कुत्र ?, छात्रोऽयं गुरुसेवां अयमत्र शास्त्रं पुस्तकेनात्मने पण्डितादालये । १ ।

'काह करत को ईहां काह पढ [ काहें ] का किंह का पास काहां ककरें'—किं कुर्वन् कोऽत्र किं पठति केन कस्मै कुतः कुत्र कस्य ?, गुरुसेवां छात्रः शास्त्रं पुस्तकेनात्मने पण्डितादालये द्विजस्य । २ ।

—एवमादयो अन्या अपि अष्टविवक्षोक्तयो नवसंख्याः प्रयोज्याः ॥ छ ॥

नवानां विवक्षायामेकैवोक्तिः । यथा—

'को ए काह करत को काह पढ काहें का किहं का पास काहां ककरें'—क एष किं कुर्वन् कः किं पठति केन कस्मै कुतः कुत्र कस्य ?, छात्रोऽयं गुरुशुश्रूषामसौ शास्त्रं पुस्तकेनात्मने पण्डितादाश्रमे ब्राह्मणानाम् । १ ।

एवमत्रोक्तीनामेकादित एकाशीतिर्दर्शिता । अनेनैव च क्रमेण पञ्चशतान्येकादशोत्तराणि प्रयोज्य बालानां दर्शयितव्यानि ।

आमन्त्रणपदविवक्षायां चैता उक्तयस्तत्सहिताः प्रयोज्याः । यथा—

'अहो को तुं'—भोः कस्त्वम् ?, देवदत्तोऽहमित्यादि ॥ छ ॥

अथ दशानामप्यर्थानामुक्ति-प्रत्युक्ती भुजङ्गप्रयाताभ्यां यथा—

सखे ब्रूहि कस्त्वं चिरं किं च कुर्वन्
लिखेत् कः किमत्रेदृशं केन कस्मै । [प० १६-२]
कुतः कुत्र कस्येति लोकोक्तिरेषा
यदेकत्र वाच्ये दशानां विवक्षा ॥
अहं विप्रपुत्रः पठन्नेव शास्त्रं
लिखामि स्वयं पाणिनैवात्मने स्वात् ।
गुरोः प्राप्य तिष्ठन् गृहेऽस्यैव रम्ये
प्रयोगप्रकाशं य(ज)गत्स्वार्थहेतुम् ॥

इदमुक्तिव्यक्तिशास्त्रं प्रयोगप्रकाशापरनामधेयमित्यर्थः । सविशेषणेषु च विवक्षितेषु तत्सहिताः प्रयोज्याः । यथा—

'को ए मुंडें मुंडे दीर्घी चूलीं धोती परिहें'—कोऽयं मुण्डितमुण्डो दीर्घचूडः परिहितधौतवस्त्रः ?, विद्यार्थी ।

'कैसें काह करत, को कस इहां, कैसें काह पढ, कैसें काहे, कैसें का किह, कैसे हि काहितौ, कैसें ककरें, कैसें काहां' – कथं किं कुर्वन्, कः कीदृशोऽत्र, कथं किं पठति, कीदृशेन केन, कीदृशाय कस्मै, कीदृशात् कस्मात्, कीदृशे कस्मिन्, कीदृशस्य कस्य ।

सारदं कुरु ( सादरं गुरु?-)सेवामसौ विद्यार्थी स्वाचारः सुस्पष्टामुक्तिव्यक्तिं शुद्धेन पुस्तकेनान्वयार्थिने स्वस्मै शिष्यहिताद् गुरोर्निरुपद्रवे गृहे अस्यैवोपकारशीलस्येति ॥ छ ॥

एते च लिङ्गार्थादयो विवक्षाक्रमेण छन्दोनुरोधेन च यथेष्टमपि प्रयोज्याः, नतूक्तक्रमेणैव ।

एतस्मादर्थदशकाच्च बाह्य एकादशोऽर्थो वेदेषु [ प० ३७-१ ] शास्त्रेषु लोकेषु वा क्वापि नास्त्येव प्रायः, तस्य प्रयोगा दर्शनात् । एतानि च दशपदानि मूलानि कृत्वा, य एषां पल्लवाः – कालभेदजा आख्यातिककार्त-प्रत्ययार्थ-विशेषभावाद् लिङ्ग-संख्या-पुरुषभेदकृता उक्तानुक्तत्वनिबन्धना विशेषण विशेष्यभावभाविनस्ते च नियतसंख्या अप्यनियतसंख्या एव । लोकोक्तिभङ्गीनामपरिसंख्येयत्वात् । किन्तु मूलमाश्रित्य विवक्षा भवति । तच्च दशविधमेव । तदनुगताश्च पल्लवा विवक्षिता अविवक्षिता वा यथेष्टं प्रवर्तन्त एव । अत एकादशोत्तराणि पञ्चशतान्येवोक्तीनामित्युक्तम् । एवं स्थिते त्रि(वृ?)तस्यादि-त्यादयो दर्शितलिङ्गानुशासनाश्च बाला यथाप्रज्ञमेक-द्व्यादि विवक्षाक्रमेणोक्तिं शिक्षयितव्याः । ततो ज्ञातनिःशेषोक्तिभेदाः संस्कृतं जानन्त्येव परम् । तथा च सति यदि विशेषसंस्कारार्थं शब्दशास्त्रं स्ना(श्रा)व्यन्ते तदा को दोषः । किं च तदा तत् तेषां सुखग्राह्यं भवति । गुरुरपि चानायासेनैव बोधयत्यचिरेण च । इतरथा तु स्यादित्याद्योर्लिङ्गानुशासनानां च निर्माणमभ्यसनं च निरर्थकमेव । अकृत-तदाभ्यासानामपि शब्दशास्त्रस्य जा(या)वज्जीवाभ्यासेन [ प० ३७-२ ] तदर्थावगमदर्शनात् । न च कृततदभ्यासानां ज्ञातशब्दशास्त्राणामभ्यस्ततर्कमीमांसार्थशास्त्रशा(सा)हित्यानामपि लेखपत्रादिषु लोकव्यवहारोपयुक्तेषु [अ]नभ्यस्तोक्तिप्रकाराणां प्रावीण्यं कदाचनापि भवति । दृश्यन्ते हि सर्वज्ञा अपि छान्दसवदितरजनवद् वा तदर्थं तदभिव्यक्तमभ्यर्थयन्तः, इतरजनेषु पठितमूर्ष-(र्ख)व्यपदेशभाजश्च । उक्तिप्रकाराभिज्ञास्त्वज्ञातेतरशास्त्रा अपि लोकव्यवहारं प्रवर्त्य(र्ति)-यन्तो राजगृहादिषूपादेया दृश्यन्त एव । अतः शास्त्रस्य प्रथमं दृष्टफलं लोकव्यवहार एव । अत एवैतच्छास्त्रं कृतम् । तस्माद् उक्तिव्यक्तिं बालाः शिक्षयितव्या एव ॥ छ ॥

## ॥ इत्युक्तिव्यक्तिविवृतावुक्तिभेदव्याख्या ॥

ॐ

अथ 'अकर्मक-सकर्मका एवम्' [का० ९] इत्युक्तम्, अतो बालशिक्षार्थं तदनुगता लोकोक्तयो अपरा अपि कियन्त्यो लिख्यन्ते। तत्राकर्मकधात्वर्थानु[ग]ताख्यावद् यथा –

'गांग न्हाएं धर्मु हो, पापु जा' – गङ्गायां स्नाते धर्मो भवति, पापं याति।

अथवा – 'धर्मु भा, पापु गा' – धर्मो बभूव, पापं जगाम।

अथवा – 'धर्मु होइह, पापु जाइह' – धर्मो भविष्यति, [प० ३८-१] पापं यास्यति। 5

– एवमन्येऽपि पल्लवाः पूर्वोक्ताः प्रतिप्रयोगं योज्याः बालशिक्षार्थम्। ग्रन्थविस्तरभयाच्च न दर्शिताः॥ छ॥

'जस जस धर्मु वाढ, तस तस पापु घाट' – यादृग् यादृग् धर्मो वर्धते, तादृग् तादृग् पापं घट्टति, घट्टयति वा। घट्ट चलने भ्वादौ, चुरादौ च।

'जब जब धर्मु वाढ, तब तब पापु ओहट' – यदा यदा धर्मो वर्धते, तदा तदा पापं 10 अवघटति, अवघटयति वा। घट संघाते चुरादौ।

'जैसें जैसें धर्मु जाम, तैसें तैसें पापु खा(खा)म' – यथा यथा धर्मो जायते, तथा तथा [पा]पं क्षीयते। जनी प्रादुर्भावे; क्षि क्षये, क्षयति वा।

'जेंइं जेइं धर्मु पसर, तेइं तेइ पापु ओंसर' – येन येन धर्मः प्रसरति, तेन तेन पापमपसरति। सृ गतौ, उपसर्गादर्थान्तरम्। 15

'येहा येहा धर्मु चड, तैहा तैहा पापु खस' – यस्मिन् यस्मिन् धर्मश्चटति चटयति वा, तस्मिन् तस्मिन् पापं स्खलति ह्रसति वा। चट स्फुट भेदने; स्खल संचये, चलने च। तुश(स) ह्रश(स) शब्दे।

'जाहां जाहां धर्मु नांद, ताहां ताहां पापु मान्द' – यत्र यत्र धर्मो नन्दति, तत्र तत्र पापं मन्दते। टुणदि समृद्धौ; मदि स्मृतिमोदादिषु, गतावत्र। 20

'जा किंह धर्मु कीज, ता किंह पापु खीज' – [प० ३८-२] यस्मै धर्म्मः क्रियते [तस्मै] पापं क्षीयते। डुकृञ् करणे, क्षीज कूजेत्यादि; खिद्यत इवापास्तत्वात्।

'जातौ धर्मु पाविअ, तातौ पापु सामिअ' – यतो धर्म्मः प्राप्यते, ततः पापं शाम्यति। आप्लृ व्याप्तौ; शमु दमु उपशमे।

'याकर धर्मु उसस, ताकर पापु ओंरुस' – यस्य धर्म्म उच्छ्वसिति, तस्य पापमवहसति। 25 श्वस प्राणने; हसे(स) हसने; ह्रसति वा।

– एवमन्येऽप्यकर्मकेषु लोकोक्तिप्रकाराः क्रिया-कारकानुसारेण प्रयोज्याः॥ छ॥

अथापरेऽप्यकर्म्मकेषु प्रकीर्णप्रयोगा लिख्यन्ते। यथा –

'बाल रैंग' – बालो रिंगति। रिगिर्गत्यर्थेषु।

'अंमेलुआ काढत आच्छ' – अम्मेलुकमाकर्षन्नास्ते। अमि रमि शब्दे; इल प्रेरणे; 30 आभ्यामम्मेलुकसिद्धिर्यथाकथंचित्। अथवा देशिपदमेतत्।

'चीर्णी देन्त आच्छ' — खानिका ददद्‌ास्ते ।
'तरुण वल्ग' — तरुणो वल्गति । वल्गिर्गत्यर्थेषु ।
'बूढ कुंथ' — वृद्धः कुन्थति । कुथि पुथि लुथीत्यादि ।
'सांडु नान्द' — सांडो नर्द्दति । नर्द्द गर्द शब्दे ।
5 'पीडें कान्द' — पीडया क्रन्दति । कदि क्रदि क्लदीत्यादि ।
'वहु लांजें संकुड' — वधूर्लज्जया सङ्कुचति । कुंच क्रुंच कौटिल्याल्पी [प० १९-१] भावयोः ।
'जूझण किहं साज' — योद्धुं सज्जति ।
'जिण आ उसज्ज' — जित्वा आगत उत्सज्जति । षस्ज गतौ ।
10 'ममहा मूझ' — मर्म्महतो मूर्च्छति । मूर्च्छा मोहेति ।
'गोडंहा खंज' — मो(गो?)दंडके हतः खंजति । खजि गतिवैकल्ये । गविभू गौदंड इव, अधः काय उच्यते । देशिपदं वा गोड इति, चूतड-पेट-रीडादिवत् ।
'मांत हाथि गूंज' — मत्तो हस्ती गुञ्जति । गुंजि अव्यक्ते शब्दे ।
'अयाण पूछा लट' — अज्ञानः पृष्टो लटति । लट परिभाष्ये बाल्ये च ।
15 'घोड धूलिं लोट' — घोटको धूलौ धूल्यां वा लोटयति । लुट विलोटने । अथवा, लोलति, लोडृ अनादरे । डलयोरेकत्वे ।
'विडरा घोड उफड' — विद्रुतो घोटक उत्फलति । दल ञिफला विसरणे ।
'वआलिं रूषु(खु) उपड' — वाताल्या वाताल्यां वा वृक्ष उत्पटति । अट पट इ[ट] गतौ ।
'मल्लाउझ मालु अफोड' — मल्लयुद्धे मल्ल आस्फोटयति । स्फुटिर विशरणे ।
20 'सूपें पच्छोड' — सूर्प्पेण प्रस्फोटयति । स एवाविवक्षिते कर्म्मणि ।
'समाण वेताल कीड' — श्मशाने वेतालः क्रीडति । क्रीडृ विहारे ।
'ऊन्ह वथु बफा' — उष्णं [प० १९-२] वस्तु बर्फ्फति । बर्फ रफ रफीत्यादि ।
'विहांणहिं आदितु रफा' — विभानके आदित्यो रफति । उक्त एव ।
'चेलिका वोटें खेल' — चेलिको वर्त्तकेन खेलति । वेल्ल चेल्ल खेल्ल गतौ । चेलतीत्येवं-
25 शीलश्चेली स एव चेलिक[ः], संज्ञायां कः । एवं लाडिकः । लड उपसेवायाम् । तथा वृत्तत्वाद् वृत्तम्, संज्ञायां के, वृत्तकम् । लाक्षामयं पेलकपर्यायम् ।
'नहरुएं खोड' — नभोरूपेण खोडति । खोडृ गतिप्रतीघाते । नभोरूपो व्याधिविशेषः, सर्वगत्वात् स्वच्छत्वाद् वा । डलयोरेकत्वे — 'आंग खोल' — अंगं खोलति ।
'चोरें मूठ दुखिआ कांख' — चौरेण मुष्टो दुःखितः कांक्षति । कांक्षि कांक्षायाम् ।
30 'मोंसें पाएं सुखिआ तूस' — मोष्ये प्राप्ते सुखितस्तुष्यति, हृष्यति वा । तुष हृष तुष्टौ । मुष्यत इति मोष्यं वस्तु । ध्यणि रूपम् ।

'धनें पूतें पाएं सवु को उलस' – धने पुत्रे च प्राप्ते सर्वः कोऽपि उल्लसति। लस श्लेषणक्रीडायाम्।

'भांगें बलें वी( धी ?)र पर रहइ' – भग्ने बले वी(वी ?)रः परं रहति। रह त्यागे। जीवितलोभं त्यक्त्वा युध्यत इत्यर्थः।

'उपरहन्ती काढें तल छड पेदें रह' – उपरिष्टादाकृष्टो (?) उपरिष्टादाकृष्टे तल 5 [पृ० ४०-१] शिष्टं प्रकरणे रहति। अवशिष्यते। उपरितनं[1] गृहीत्वा त्यज्यत इत्यर्थः।

'मारित चोरु निसता' – मार्यमाणश्चौरो निस्त्यायति। ष्टै स्त्यै शब्द-शं(सं)घातयोः। निःसत्त्व इवाचरति निःसत्त्वायते[2] वा।

'छूट वाछा भमि भमि कूद' – छुटितो वत्सकस्तर्णको वा भ्रान्त्वा भ्रान्त्वा कुर्दति। कुर्द खुर्द गुर्द क्रीडायामेव। 10

'ओड धरा उबक' – आर्द्रं घृतमुद्वङ्कते। वकि कौटिल्ये।

'बाल चौंक' – बालश्चकते। चक प्रतीघाते। चमत्करोति।

'अंधारीं राति चोरु ढूक' – अन्धकारो विद्यते यस्या इत्यन्धकारिण्याम्, अथवा अन्धकारः संजातो यस्या इत्यन्धकारितायां रात्रौ चौरो ढौकते। ढौकृ गत्यर्थो दण्डके। तदस्यास्तीतीन्। तारकादित्या(त्वा)त् संया(जा)ते इति च। 15

'लौडीं लागि टेक' – लकुडिकायां लगित्वा टेकते। टिकृ टीकृ गतौ, दंडके। स्वल्पो लगुडो लगुडिका। लगे संगे।

'आगि लागें वांस फूट' – अग्नौ लग्ने वंसः स्फोटते। स्फुट विकसने।

'भार लेन्त निहुड' – भारं गृह्णन् आददानो वा लात्वा निहुंडते। हुडि पिडि संघाते।

'भएं कांप' – दरेण कम्पते। कपि चलने। 20

'बडकरीं डाल बड [पृ० ४०-२] रोहि लांब' – वटस्य दालायां वटरोहिका अवलम्बते। लबि अवस्रंशने। दल ञि(त्रि ?)फला विशरणे। हेताविन्। दालयति विस्तारयति वृक्षमिति दाला। अङि रूपम्, यथा भिदा।

'सोअणिहार जंभा' – स्वप्स्यन्, स्वप्नुकामो वा, सुषुप्सुर्वा, जम्भते, तृ(जृ)म्भने(ते) वा। जभ तृ(जृ ?)भी गात्रविनामे। 25

'मदें पिएं विसें खाएं ऊणिदे घूम' – मदे पीते विषे खा(खा)दिते उन्निद्रे वा सति, घूर्णते। घुण घूर्ण भ्रमणे।

'पाक व्रण पियुअ' – पक्वो व्रणो विपूयते। पूयी विघ(श ?)रणे दुर्गन्धे च।

'सुकालं अन्नु निफज' – सुकाले अन्नं निष्फायते। स्फायी ओप्यायी वृद्धौ।

---

1 उपपरितनं। 2 निःसत्त्वायते।

'सेंफे खुहु खुहु कर' – श्लेष्मणा क्षुहुत् क्षुहुत् काश(स)ते । काशृ शब्दकुत्सायाम् । क्षुहुदित्यव्यक्तानुकरणम् ।

'पुनवन्तेकरें भोजं भूषे(खे) बाह्मण अघांति' – पुण्यवतो भोज्येषु बुभुक्षिता ब्राह्मणा आघवन्ते । गुङ घुङ गतौ । आघ(यं)ति आघयन्ति वा । अघ पापकरणे विकल्पे नन्तः, अनेकार्थत्वात् ।

'हलुअ वथु पाणि तरंग' – लघुकं वस्तु पानीये प्लवते । पुङ प्लुङ गाङ सीङ गतौ । तरंग इवाचरति, तरंगायते वा ।

'चडई [ प० ४१-१ ] पाखे रुअ वायं उडा' – चटिकापक्षेण तूलं वातेनोड्डीयते । डीङ विहायसां गतौ ।

'ओंदें कापडं पाणि गल' – आर्दे(र्द्रे) कर्पटे पानीयं गलति । गड सेचने । डलयोरैकत्वे ।

'वर्षाकालं मीतिं विसम' – वर्षाकाले भित्तिर्विषमति । षम ष्टम वैकल्ये ।

'पर्व्वतउ टलथि विसिठु कि बल' – पर्व्वतोऽपि टलति विशिष्टः किं बलति । टल ट्वल वैकल्ये । बल प्राणने ।

'सिष्ट आपणे बोलें न चलइ' – सि(शि)ष्ट आत्मीयवचसि न चलति, बोले वा । बुल निमज्जनेऽनेकार्थः ।

'मीच्छें बोले काउ न रोहइ' – मिथ्याभाषिते कदाचनापि न रोहति । रुह जन्मनि ।

'जो फुड बोल सो गांग न्हा' – यः स्फुटं वदति स गंगां स्नातीव ।

'विलखाई रोव' – विलक्षया रोदिति । रुदिरु अस्रु(श्रु)विमोचने ।

'उणींद भा तेइं सोअ' – उन्निद्रो भूतस्तेन स्वपिति । ञिष्वप् स(श)ये ।

'निदालुध जांत मीति अभिड' – निद्रालुब्धो गच्छन् भित्तावभीट्टे । ईड स्तुतौ ।

'जो जाग, सो वाग' – यो जागर्त्ति स वल्गते । जागृ निद्राक्षये । सावधानो न मुष्यत इत्यर्थः ।

'जो पूच्छ सो आच्छ' – यः पृच्छति स आस्ते । आश(स) [ प० ४१-२ ] उपवेश(स)ने । पर्यालोचितकर्त्ता न नश्यतीत्यर्थः ।

'पूतकरें वधावें नाच' – पुत्रस्य वर्द्धापनके नृत्यति । नृती गात्रविक्षेपे । वर्द्धापनं चुरादि-निपातेषु ।

'घाम घाला उद सुखा' – घर्मे घातितं सार्द्रं सु(शु)ष्यति । शुष शोषणे । हंत्यर्थाश्चेति स्वार्थे नन्ताद्धन्तेर्घातितमिति रूपं भापितमित्यर्थः ।

'धावन्त पसीज' – धावन् प्रस्विद्यति । स्विदा गात्रप्रक्षरणे ।

'पंचगवें पीएं सूझ' – पञ्चगव्ये पीते सु(शु)ध्यति । शुध शौचे ।

'रशु(सु) काहु न सीझइ' – रसः कस्यापि न सिध्यति । षिधु संराधौ ।

'जोन्हे चकोर तृप्त हो'—ज्योत्स्नया चकोरस्तृप्यति, तृप्तो भवति वा।

'अघाण नीचु दर्प्प'—अघावान्नीचो दृप्यति। दृप हर्षण-मोचनयोः; अघ पापकरणे अदन्तः। अघनमघा तृप्तिरनेकार्थत्वात्। सं(शं)सिप्रत्ययादा, सा विद्यते यस्येति।

'विचिकित कि मोहिअ'—विचिकितः किं मुह्यति, मोह्यते वा अन्येन। मुह वैचित्त्ये।

'नीचु पर माचै'—नीचः परं माद्यति। मदी हर्षे। 5

'अपराधें कोह, रूस'—अपराधेनापरा[धा]द्वा कुप्यति, क्रुध्यति, रुष्यति। कुप क्रुध रुष रोषे।

'संतुष्टेहि थोडेहिं पूज'—[प० ४२-१] संतुष्टस्य स्तोकेनैव पूर्यते। पूरि आप्यायने।

'लोभी अणपांवत क्लेसिअ, नित खीज'—लुब्धो अप्राप्नुवत्(०न्) क्लिश्यति, नित्यं खि(खि)द्यते। क्लिशू विबाधने, खिद दैन्ये। 10

'मनावेउ न मानइ'—मानितोऽपि न मन्यते। मन ज्ञाने।

'बारिसं गोवरु ओंकिरा'—वर्षासु गोमयमुत्किरति। कॄ विक्षेपे।

'पुराण लेउ उकिल'—पुराणो लेप उत्किलति। किल सै(शै)त्य-क्रीडनयोः। इनि ति उकेल। उत्केलयति।

'कांण कवडा उबिड'—काणः कपर्दका उद्विडति। बिड भेदने। इनि तु उबेड। 15 उद्वेडयति। डलयोरेकत्वे—उबेलयति पशूनिति सकर्म्मकोऽपि।

'विसिठु न चाहा मिलइ'—विसि(शि)ष्टो नान्विष्टो मिलति, चाहितो वा। मिल श्लेषणे; चह परिकल्कने, अनेकार्थत्वात्।

'बेदह खेलणि खेल'—वैदग्ध्यः खेलनैः खेलति। खिल खेलने। विगतं वैदग्ध्यं यस्य। खेलयतीति खेलनाः—कन्दुकादयः। 20

'सिठु लाजें संकुड'—सि(शि)ष्टो लज्जया संकुटति, संकुचति वा। कुट कौटिल्ये; कुच संकोचने।

'दूंजणें सउं सबकाहु तूट'—दुर्ज्जनेन समं सर्व्वस्य कस्यापि त्रुट्यति। त्रुट कलहकर्म्मणि। रज्जुस्त्रुट्यति—'जेवडि तूट'।

'सूखें काठे [प० ४२-२] कौआ करड'—शुष्के काष्ठे काकः क्रुडति। क्रुड घसने। 25

'दुआर पइसति निहुड'—द्वारि प्रविस(श)न्निघुटति, निहुडति वा। घुट प्रतीघाते; हुड संघाते।

'बोलें उत्तरु काहु फुरइ'—उक्ते सत्युत्तरं कस्यैव स्फुरति। स्फुर स्फुरणे।

'सयाण सबहति व्यापार'—सज्ञानः सर्व्वत्र व्याप्रियते। पृङ व्यायामे।

'एकै बाबु नित खाजत उबिजा'—एकमेव वस्तु नित्यं खाद्यमानमुद्विजते। उविजी भय- 30 चलनयोः।

'नाग लजा'—नग्नो लज्जते। 'नागि लज्जा'—नग्ना लज्जते। उरजी (उलस्जी ?) व्रीडे।

'अनिकें घिण'—अनिक्तेन घृणुते, घृणोति वा। णिजिर् शौ(शौ)चे, ति निक्तम्। घृणु दिप्तौ।

'मेघु गाज'—मेघो गर्ज्जति। गर्ज्ज मार्ज्ज शब्दार्थौ।

5 'जालें लागें पालीढांकां हांडी मासु चुड'—ज्वाले लग्ने ज्वालायां वा पालिच्छ(क?)या धक्कितं भांडिकायां मांसं चुट्टति, चुट्टयति वा। चुट्ट छुट्ट अल्पीभावे; नक्क धक्क पसि नाशने। धक्कितं पिहितमित्यर्थः। पालयति रक्षतीति पालिका पिधानम्। स्वल्पं भांडं भांडिका।

—एवमन्येऽप्यकर्मका ऊह्याः। सपल्लवाश्च प्रयोज्या यथेच्छमिति ॥ छ ॥

ॐ

10 अथ [प० ४३-१] सकर्मका उदाह्रियन्ते। यथा—

'जब पूतु पाउ पखाल, तब पितरन्हु सर्गु देखाल'—यदा पुत्रः पापं क्षालयति, तदा पितॄन् स्वर्गं दर्शयति। क्षल शौचे। पितृभिर्वा।

'जेत जेत परा धनु चोराअ, तेत तेत आपण पूनु हराव'—यावद्यावत् परधनं चोरयति, तावत् तावद् आत्मनः पुन्यं(ण्यं) हारयति। नाश, नाशयति। चुरु स्तेये।

15 'जो परकेंहं बुरुअ चिंत, सो आपणुकेहं तैसें मा(मं?)त'—यः परस्य कृते विरुद्धं चिन्तयति, स आत्मनः कृते तादृशमेव मन्त्रयते। चिति स्मृत्याम्; मन्त्रि गुप्तभाषणे।

'जेंम जेंम मा पूतुहि दुलाल, तेम तेम दूजणकर हिअ जाल'—यदा यदा—यथा यथा वा माता पुत्रं दुर्लाडयति, तदा तदा—तथा तथा वा दुर्ज्जनस्य हृदये(यं?) ज्वालयति। लड उपसेवायाम्; ज्वल दीप्तौ।

20 'अहिर गोरू वाग मेलव'—आभीरो गोरूपाणि वर्गे मेलयति। मिल तिल स्निह स्नेहने। डलयोर्विपर्यये तिलस्य [ड?]—'उतेड'—उत्तेडयति।

'घोड थणवाला न्हात तु(उ)तेड'—घोटकं स्थानपाल[:] स्नान्तमुत्तेडयति।

'वयालिं रूखुं उलंड'—वाताली वृक्षमोलंडयति। ओलडि उत्क्षेपे। [प० ४३-२]

'उनाड चूडा सोनार'—उन्नाटयति चूडकं स्वर्णकारः। नट अवस्यन्दने।

25 'पोटल बांध ल्हुसिआर'—बाधयति पोटलकं लुंटाकः। बध संज(य)मने। बध्नाति, बन्ध बन्धने।

'पोटल लै जाण पार'—पोट्टलकं गृहीत्वा गन्तुं पारयति। पृ पूरणे।

'बलिअ परा धनु जो(चो?)ड। चोड(र?) गांठि छोड। कांड अच्छोड। पहारी चोरहि लौडें कूट'—बलवान् परधनमाचोडयति। चौरो ग्रन्थिं चोटयति। कांडमाच्छोडति। प्रहरकी चौरें (चौरान्?) लगुडेन कुट्टयति। चुट छुट कुट्ट छेदने।

'चूकें मासु चुडाव'—चुकेण मांसं चुट्टयति । चुट्ट चुट्ट अल्पीभावे; हेताविति ।

'माल्ल मालहि मोड'—मल्लो मल्लं मोटयति । मुट संचूर्णने ।

'दुभिषु( खु ) आघु घटाव'—दुर्भिक्षो अर्घं घट्टयति । घट चलने हेत्वर्थे । अन्यथा तु अर्घो घट्टति घट्टयति वा दुर्भिक्षे ।

'कुआरु नदी ओहटाव'—आश्विनो नदीमवघट्टयति । हेतौ । अन्यत्र तु अवघट्टति नदी ।

'कुटुम्बि घरु छाअ'—कुटुम्बी गृहं छादयति ।

'केवट नाव [ प० ४४-१ ] घटाव'—कैवर्तो नावं ष(ख)ट्टयति । छद खट्ट संवरणे ।

'केण साट । फाट तुंग । रुअ पींज । कणिक पीस'—क्रय(या)णकं सट्टयति । पाटितं तुंजयति । तूलं पींजयति । कणिकाः पेसयति, पिनष्टि वा । षट्ट तुजि पिजि पिस हिंसादिषु । पिष्लृ संचूर्णने । गोधूमस्य क्षुद्रावयवाः कणिकाः ।

'नाउ आंग पीच'—नापितो अंगं पिच्चति । पिच्च कुट्टने ।

'गुरु सीसन्ह ताड'—गुरु[ः] शिष्यान् ताडयति । तड आघाते ।

'बोलत जेंवत जीभ षां(खां)ड, जमाई आए चाउलु कांड'—वदन् जिंवन् जिह्वां खंडयति, भुंजानो वा । यामातर्यागते ( जामातर्यागते ? ) तंदुलान् कंडयति । खड खडि कडि भेदे ।

'सासु मुहुं ढाक । हालि खेतु पांस । कुपूतु कुलु पांस'—श्वश्रू मुखं धक्कयति, धक्कति वा । हालिकः क्षेत्रं पसयति । कुपुत्रस्तु कुलम् । नक्क धक्क पसि नास(श)ने ।

'भंडारी पेई ताल'—भांडागारिकः पेदि(टि ?)कां तालयति । तल प्रतिष्ठायाम् ।

'वरं कन्या तुलव'—वरेण कन्यां तोलयति । तुल उन्माने ।

'वाउ डाल डोलाव'—वातो दालां दोलयति । दुल उत्क्षेपे ।

'नइ वाढी काच्छ बोल'—नदी वृद्धा कक्षं बोलयति । बुल निमज्जने ।

'गाड तोप'—गर्तं [ प० ४४-२ ] स्तूपयति । स्तूप समुच्छ्राये ।

'गोरवे मनाव'—गौरवितान् मानयति । मान पूजायाम् ।

'तेलि सरिसव पेल । हाथि रूषु(खु) पेल । घोड नाल डेव'—तैलिकः सर्षपान् पेलयति । हस्ती तु वृक्षम् । घोटको नालकं डेवयति । कल पिल डिप क्षेपे ।

'सूअर घूटु उकुंड । राजा प्रजा पाल'—सू(शू)करः कूटमुत्कुंडति । राजा प्रजां पालयति । कुडि जसि पल रक्षणे । अवकररासौ(शौ) घूटशब्दो लोके ।

'सामिहिं सेवक विनव'—स्वामिनो(नः) सेवको विज्ञपयति । ज्ञप मानुबंधाश्च । स्वार्थे नन्त इत्यर्थः ।

'गाउं चला संजव'—ग्रामं चलितः संयमयति । यमच परिवेषणे ।

'वाढणि बाढि दासि कतवार फेड'—वर्द्धन्या मार्जन्या वा वर्द्धयित्वा संहृत्य वा दासी

चेटिका वा कृत्यवारं स्फेटयति । स्फिट्ट बुद्धि (बुधि) हिंसायाम् । कृत्यं=धर्मार्थकामान् वारयति=निषेधयति, कृत्यवारः=अवकरः, अपवित्रत्वात् ।

'सातु पींड' – शक्तून् पिंडयति । पिडि संघाते ।

'लिहा पोंछ' – लिखितमुत्पुन्सयति । पुन्स अभिमर्द्दने ।

'देउ पूज' – देवं पूजयति । पूज पूजायाम् ।

'राड वलद जोड । सथवैद कान जोड' – रद्दो(ड्डो ?) बलीव[ प० ४५-१ ]र्द्दान् जोडयति । शल्यवैद्यः कर्णम् ।

'घरु चूर हाथि' – गृहं चूर्णयति हस्ती । यु(जु)ड चूर्ण प्रेष(र ?)णे ।

'प्रमेउ प्रपंच' – प्रमेयं प्रपंचयति । पचि विस्तारवचने ।

'नगायरि सूरेहि उतेज' – नग्नाचार्यः सू(शू ?)रमुत्तेजयति । तिज निशा[म]ने ।

'गोत्र उत्कीर्त्त' – गोत्रमुत्कीर्त्तयति । कृत संशब्दने ।

'उघट' – उद्घटयति । 'आंगण वाढ' – अंगणं वर्द्धयति ।

'अधिक दारु वडाव' – अधिकं दारु वर्द्धयति ।

'मेघु नदी वढाव' – मेघो नदीं वर्द्धयति । वर्ध च्छेदन-पूरणयोः ।

'आंखीं लुंब' – अक्षिणी लुंबयति ।

'कापडं तुंग' – कर्प्पटं तुंगयति । लुबि तुबि अर्द्दने ।

'तेलें पा मखार' – तैलेन पादौ म्रक्षयति । म्रक्ष म्रक्षणे ।

'देसु लड लुंबडु' – देशं लुंटयति लुंटाकः । रुटि लुटि स्तेये ।

'अन्न छर्द्द' – अन्नं छर्द्दयति । छर्द्द वमने ।

'हाथि गुड महाउतु' – हस्तिनं गुंडयति महामात्रः । गुडि वेष्टने । मसना अवगुंडयति ।

'बलाहिर गांउं वाट' – बला(ली?) वीरो ग्रामं वंटयति । वटि विभाजने ।

'दुआर मांड' – द्वारं मंडयति । मडि भूषायाम् ।

'विड्डरा घोड उलाल' – विद्रुतो घोडक उल्लालयति । बालकः कंदुकं वा ।

'बाल दुलाल' – बालं [ प० ४५-२ ] दुर्लालयते । लल ईप्सायाम् ।

'मुहुं निहाल' – मुखं निभालयते । भल आभंडने ।

'धनु निवेद' – धनं निवेदयते, अर्प्पयतीत्यर्थः ।

'वार्त्ता निवेद' – वार्त्ता निवेदयते, कथयतीत्यर्थः । विद चेतनाख्याननिवासेषु ।

'गुडें लरडि हथोली चाट' – गुडेन लिप्तां हस्ततालिकां चाटयति ।

'पोफल फोड' – पूगफलं स्फोटयति । चट स्फुट भेदे ।

'राजा आज्ञाप' – राजा आज्ञापयति । ज्ञा नियोजने ।

'तिल सोंधें वास' – तिलान् सुगंधेन वासयति । वस स्नेहच्छेदावरणेषु ।

'मध्यस्थ होइ विचार' — मध्यस्थो भूत्वा विचारयति । चर असंशये ।
'आदरत गाउं मुचाव' — आदरं ग्रामं मोचयति । मुच प्रमोचने ।
'काठ फाड' — काष्ठं पाटयति । पट पुटीत्यादि ।
'चौकु पूर' — चतुष्कं पूरयति । खंल(लं) वा, रिक्तं वा । पूरि आप्यायने ।
'कहणीं कह' — कथानिकां कथयति । कथ वाच्य(क्य ?) प्रबन्धे ॥ छ ॥
'कन्या बर' — कन्यां वरयति । वर ईप्सायाम् ।
'कवड गण' — कपर्दकान् गणयति । गण संख्याने ।
'धूतु गमासहि अकल' — धूर्तो ग्राम्यं आकलयति । [प० ४६-१] ।
'भल सगुनु भल सूच' — भद्रः शकुनो भद्रं सूचयति । सूच पैशून्ये ।
'अहेडें जांत क्खोड' — अ[ा]खेटके गच्छन्तं व्याखोटयति । खोट क्षेपे । खोल क्षेप इति पाठे — अंगं खोलयति ।
'पुरुषहि अनुसील' — पुरुषमनुसी(शी)लयति । शील उपधारणे ।
'चित्रु रच' — चित्रं रचयति । रच प्रतियत्ने ।
'कलि साव' — कलिं कलहं वा सामयति । साम सान्त्व(न्त्व)ने ।
'हरावा गवेस; गा गवेस' — हारितं गवेषयति, गतं वा । गवेष मार्गणे ।
'मधक वथु विभंज' — मध्यकं वस्तु विभाज्यते । भाज पृथक्कर्मणि ।
'चीकण रूष(ख)य' — चिकणं रूक्षयति । रूक्ष पारुष्ये ।
'व्रीहिं उमिस' — व्रीहि(ही)नुन्मिश्रयति । मिस(श्र) संपर्चने ।
'पाता छेद' — पत्रं छिद्रयति; कर्णं वा । छिद्र कर्णवेधे ।
'लुई (?) आंक' — उल्मुकेनाङ्कयति । अकि लक्षणे ।
'काजु निरूप' — कार्यं निरूपयति । रूप रूपक्रियायाम् ।
'पाता छेद' — पात्रं छेदयति । छेद द्वैधीकरणे ।
'निलज्जु अपाण वान' — निर्लज्ज आत्मानं वर्णयति । वर्ण वर्ण-क्रियागुणेत्यादि ।
'कालु खप' — कालं क्षपयति । क्षप प्रेरणे ।
'बहुतें अघा' — बहुतरेणाघयति । अघ पाप [प० ४६-२] करणे, अनेकार्थत्वात् । अथवा अघाव, अघावयति । गुड घुड गत्यर्थः ।
'हिंडोल' — आंदोलयति, 'अवहेर' — अवधीरयति; इत्यादयश्च लोकोक्तेरूह्याः ॥ छ ॥
'गाउं जांत पोटलि संजव' — ग्रामं गच्छन् पोट्टलिकां संयोजयति, संयोजति वा । अत्रै-वार्थे युजादिर्विकल्पे नन्तः । पक्षे भ्वादिवत् । अर्थान्तरे तु — 'कान यो(जो)ड' — कर्णं युनक्ति । युजिर् योगे ।
'परिहस(वा) साह' — परिहासं साहयति, सहति वा । षह मर्षणे । चौरादिकेन सहते ।

'जांतं प्रेर' – जा(या)न्तं प्रेरयति, प्रेरति वा। ईर प्रेरणे। अन्यत्र – इर्त्ते।

'घिउ विलव' – घृतं विलीनयति, विलाप(य?)यति। ली द्रवीकरणे। अन्यत्र – विलीयते, विलिनाति।

'छूति वर्ज' – छुप्तिं वर्जयति, वर्जति वा। वृजी वर्ज्जने। अन्यत्र – वृक्ते, वृणक्ति।

5 'ऋण शेष' – ऋणं शेषयति, शेषति वा। सि(शि)ष असर्वोपयोगे। अन्यत्र – विशिनष्टि।

'आपण काजु विशेश' – आत्मनः कार्यं विशेषयति, विशेषति वा। विपूर्व्वो अतिशये। अन्यत्र – विशिनष्टि।

'पितर तर्प्प' – पितृंस्तर्प्पयति, तर्प्पति वा। तृप प्रीणने। अन्यत्र – तृप्यति, तृप्नोति।

'घर छाअ' – गृहं छादयति, [पृ० ४७-१] छदति वा। छद अपवारणे। अन्यत्र –
10 छादयत्येव।

'पडिआर खांड माअ' – परिवाके(?) ष(ख)ण्डो माययति, मयति वा। मी गतौ। अन्यत्र – मीनाति, मिमी(मीनी?)ते।

'दूठ हींस' – दुष्टो हिंसयति, हिंसति वा। अन्यत्र – हिनस्ति।

'निधि आसाद' – निधिमासादयति, आसदति वा। प्राप्नोत्यर्थे। आङः सद[:] पद्यर्थे।
15 अन्यत्र – आसीदति।

'परा वस्तु आप' – परस्य वस्तु आपयति, आपति वा। आप्लृ लंभने। अन्यत्र – आप्नोति।

'जेवडि ताण' – युग्वर्त्तिं तानयति, तनति वा। तनु सु(शु)द्धोपतापयोः। अन्यत्र – तनोति।

'लेख वाच' – लेखं वाचयति, वचति वा। वच संदेस(श)ने। अन्यत्र – वक्ति।

'काजु भाव' – कार्यं भावयते, भवते वा। भू प्राप्तावात्मनेपदी। अन्यत्र – भवति।

20 'गौरवे मान' – गौरवितान् मानयति, मानति वा। मान पूजायाम्। अन्यत्र – मीमांसते।

'भांडे मांज' – भांडानि मार्जयति, मार्जति वा। मृजू सौ(शौ)चालंकारयोः। अन्यत्र – मार्ष्टि।

'फुडाव' – स्फुटापयति [स्फुट भेदने]। सत्यापयति। सत्यार्थवेदानामाप्। कारादीनामागममाहुः। कारापयति, वर्णापयति, कथापयतीत्यादि॥ [पृ० ४७-२]

25 – एवमादयः स्वार्थे नन्ताः सकर्मका लोकोक्त्यनुगता यथागममन्येऽप्यूह्याः॥ छ॥

ॐ

**अथानिनन्ताः सकर्मका यथा–**

'मीठ जेवण मांग' – मिष्टं जिवितुं मंगति। अगि मगि लगि – इत्यादि दण्डके, अनेकार्थत्वात्।

'जूठ खा' – उच्छिष्टं खादति। खादृ भक्षणे।

30 'दूजण सबहि नींद' – दुर्जनः सर्वान् निन्दति। णिदि कुत्सायाम्।

